# अथ श्रीदत्तोपनिषत्  ( पूर्वतापिनी . )

श्रीगणेशाय नमः ॥ हरिः ॐ भद्रंकर्णेभिः
श्रृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥

स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्वेश्येम देवहितं यदायुः ॥
भद्रंकर्णेभिरिति शांतिः ३॥

ॐ चिन्मयं व्यापितं सर्वं आकाशं जगदीश्वरम्  ॥
निर्विकल्पं स्वयं ब्रह्मा तस्याहं पंचमाश्रमम  ॥१॥

निराकारं निराभासं निरालंबं निरंजनम्  ॥
निःशब्द उच्यते ब्रह्म तस्याहं पंचमाश्रमम्  ॥२॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतीश्वरः ॥

आश्रमाणां विभिन्नोहं तस्याहं पंचमाश्रमम ॥३॥

आश्रमाणां च सर्वेषां अस्ति नास्ति न चात्मनि ॥
भिन्नाभिन्नं नपश्यंति तस्याहं पंचमाश्रमम ॥४॥

आब्रह्मस्तम्बपर्यन्तं संपूर्णं परमात्मनः ॥
भिन्नाभिन्नं न पश्यन्ति तस्याहं पंचमाश्रमम ॥५॥

मनस्यं मनमध्यस्थं मनमायाविवर्जितम् ॥
मनसा मन आलोक्य तस्याहं पंचमाश्रमम ॥६॥

अगोचरं चैकब्रह्म तस्य देहे विलीयते ॥
निवर्तन्ते क्रियाः सर्वास्तस्याहं पंचमाश्रमम् ॥७॥

निरालंबपदं प्राप्तं यत्र ज्योतिर्लयं गतः ॥
निवर्तंते क्रियाः सर्वास्तस्याहं पंचमाश्रमम ॥८॥

स्वयं दाता स्वयं भोक्ता स्वयं देवो महेश्वरः
निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम ॥९॥

क्वचिद्योगी क्वचिद्भोगी क्वचिन्नग्नः पिशाचवत् ॥
स्वयमात्मस्वरूपेण तस्याहं पंचमाश्रमम ॥ १०॥

अभिन्नमात्मनो रूपं जगदेतच्चराचरम् ॥
निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम ॥११॥

आत्मज्ञानं विना योगी ब्रह्मचारी कथं भवेत्  ॥
गृही वा वानप्रस्थो वा यतिर्योगं विना नहि ॥१२॥

ॐ भद्रंकर्णेभिः श्रृणुयामदेवा भद्रंपश्येमा
क्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवा
सस्तनूभिर्व्यश्येमदेवहितंयदायुः ॥

स्वस्तिनाइंद्रो वृद्धश्रवाः ॥

ॐ शांतिः शांतिः शांतिः ॥

इति श्रीदत्तोपनिषत्  पूर्वतापिनी समाप्ता ॥